० ॥ २४ ॥ लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्म
३७ षाः ॥ छिन्नद्वैधा यतात्मानः सर्वभूतहिते
रताः ॥ २५ ॥ कामक्रोधवियुक्तानां यतीनां
यतचेतसाम् ॥ अभितो ब्रह्मनिर्वाणं वर्तते
विदितात्मनाम् ॥ २६ ॥ स्पर्शान् कृत्वाबहि
र्बाह्यांश्चक्षुश्चैवान्तरे भ्रवोः ॥ प्राणापानौ स
मौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥ यतेन्द्रि
यमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥ विगतेच्छा

भयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥ भो
क्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ॥ सुहृदं
सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥
ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्र
ह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
संन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥
श्रीभगवानुवाच ॥ अनाश्रितः कर्मफलं कार्यंक
र्मकरोति यः ॥ स संन्यासी च योगी च न नि

॥ २४ ॥ लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्म
षाः ॥ छिन्नद्वैधा यतात्मानः सर्वभूतहिते
रताः ॥ २५ ॥ कामक्रोधवियुक्तानां यतीनां
यतचेतसाम् ॥ अभितो ब्रह्मनिर्वाणं वर्तते
विदितात्मनाम् ॥ २६ ॥ स्पर्शान् कृत्वाबहि
र्बाह्यांश्चक्षुश्चैवान्तरे भ्रवोः ॥ प्राणापानौ स
मौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥ यतेन्द्रि
यमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥ विगतेच्छा

व ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥
बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवात्मना जि
तः ॥ अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रु
वत् ॥ ६ ॥ जितात्मनः प्रशान्तस्य परमात्मा
समाहितः ॥ शीतोष्णसुखदुःखेषु तथा मा
नापमानयोः ॥ ७ ॥ ज्ञानविज्ञानतृप्तात्मा कू
टस्थो विजितेन्द्रियः ॥ युक्त इत्युच्यते योगी
समलोष्टाश्मकाञ्चनः ॥ ८ ॥ सुहृन्मित्रार्युदा

रग्निर्न चाक्रियः ॥ १ ॥ यं संन्यासमिति प्राहु
र्योगं तं विद्धि पाण्डव ॥ न ह्यसंन्यस्तसङ्क
ल्पो योगी भवति कश्चन ॥ २ ॥ आरुरुक्षो
र्मुनेर्योगं कर्म कारणमुच्यते ॥ योगारूढस्य
तस्यैव शमः कारणमुच्यते ॥ ३ ॥ यदा हि
नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ॥ सर्वसङ्कल्प
संन्यासी योगारूढस्तदोच्यते ॥ ४ ॥ उद्धरेदा
त्मनाऽऽत्मानं नात्मानमवसादयेत् ॥ आत्मै

समंकायशिरोग्रीवं धारयन्नचलं स्थिरः ॥ सं
प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
॥१३॥ प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थि
तः ॥ मनः संयम्य मच्चित्तो युक्त आसीत म
त्परः ॥१४॥ युञ्जन्नेवं सदात्मानं योगी निय
तमानसः ॥ शान्तिं निर्वाणपरमां मत्संस्था
मधिगच्छति ॥१५॥ नात्यश्नतस्तु योगोस्ति
न चैकान्तमनश्नतः ॥ नचातिस्वप्नशीलस्य

सीनमध्यस्थद्वेष्यबन्धुषु ॥ साधुष्वपि च पा
पेषु समबुद्धिर्विशिष्यते ॥ ९ ॥ योगी युञ्जीत
सततमात्मानं रहसि स्थितः ॥ एकाकी य
तचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥ शुचौ
देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः॥ नात्यु
च्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ॥ उ
पविश्यासने युञ्ज्याद्योगमात्मविशुद्धये॥१२॥

वात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥
सुखमात्यन्तिकंयत्तद्बुद्धिग्राह्यमतीन्द्रियम् ॥
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः
॥ २१ ॥ यं लब्ध्वा चापरं लाभं मन्यते नाधिकं
ततः ॥ यस्मिन्स्थितो न दुःखेन गुरुणापिवि
चाल्यते ॥ २२ ॥ तं विद्याद्दुःखसंयोगवियोगं
योगसंज्ञितम् ॥ स निश्चयेन योक्तव्यो योगो
निर्विण्णचेतसा ॥ २३ ॥ संकल्पप्रभवान्कामां

जाग्रतो नैव चार्जुन॥१६॥ युक्ताहारविहार
स्य युक्तचेष्टस्यकर्मसु ॥ युक्तस्वप्नाववोधस्य
योगो भवति दुःखहा ॥१७॥ यदा विनियतं
चित्तमात्मन्येवावतिष्ठते ॥ निस्पृहः सर्वकामे
भ्यो युक्त इत्युच्यते तदा ॥१८॥ यथा दीपो
निवातस्थो नेङ्गते सोपमा स्मृता ॥ योगिनो
यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥ य
त्रोपरमते चित्तं निरुद्धं योगसेवया ॥ यत्रचै

गी० स्त्यक्त्वा सर्वानशेषतः ॥ मनसैवेन्द्रिय
४१ विनियम्य समन्ततः ॥२४॥ शनैः शनैरु
द्बुद्ध्या धृतिगृहीतया ॥ आत्मसंस्थं म
त्वा न किञ्चिदपि चिन्तयेत् ॥२५॥ य
तो निश्चलति मनश्चञ्चलमस्थिरम् ॥
स्ततो नियम्यैतदात्मन्येव वशंनयेत् ॥

युञ्जन्नेवं सदात्मानं योगीविगतकल्मषः ॥ सु
खेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥
ईक्षते योग युक्तात्मा सर्वत्र समदर्शनः ॥२९॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥
तस्याहं न प्रणश्यामि सच मे न प्रणश्यति
॥ ३० ॥ सर्वभूतस्थितं यो मां भजत्येकत्वमा
स्थितः ॥ सर्वथा वर्तमानोपि स योगी मयि

र्तते ॥ ३१ ॥ आत्मौपम्येन सर्वत्र समं पश्य
ति योऽर्जुन ॥ सुखं वा यदि वा दुःखं स यो
गी परमो मतः ॥ ३२ ॥ अर्जुन उवाच ॥ यो
यं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ॥
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थि
राम् ॥ ३३ ॥ चञ्चलं हि मनः कृष्ण प्रमाथि
बलवद्दृढम् ॥ तस्याहं निग्रहं मन्ये वायोरि
व सुदुष्करम् ॥ ३४ ॥ श्रीभगवानुवाच ॥ अ

महाबाहो विमूढो ब्रह्मणःपथि ॥ ३८ ॥ एत
३ न्मे संशयं कृष्ण च्छेतुमर्हस्यशेषतः ॥ त्वद
न्यः संशयस्यास्यच्छेत्ता न ह्युपपद्यते ॥३९॥
श्रीभगवानुवाच ॥ पार्थ नैवेह नामुत्र वि
नाशस्तस्य विद्यते ॥ न हि कल्याणकृत्कश्चि
द्दुर्गतिं तात गच्छति ॥४०॥ प्राप्य पुण्यकृतां
ल्लोकानुषित्वा शाश्वतीः समाः॥शुचीनां श्री
मतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥ अथवा

तपस्विभ्योधिको योगी ज्ञानिभ्योपि मतोऽधि अ
कः ॥ कर्मिभ्यश्चाधिको योगी तस्माद्योगी भ ६
वार्जुन ॥ ४६ ॥ योगिनामपि सर्वेषां मद्गतेना
न्तरात्मना ॥ श्रद्धावान् भजते यो मां स मे
युक्ततमो मतः ॥ ४७ ॥ इति श्रीमद्भगवद्गीता
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृ ४
ष्णार्जुनसंवादे अभ्यासयोगो नाम षष्ठो
ऽध्यायः ॥ ६ ॥

श्रीभगवानुवाच ॥ मय्यासक्तमनाः पार्थ योगं
युञ्जन्मदाश्रयः ॥ असंशयं समग्रं मां यथा
ज्ञास्यसि तच्छृणु ॥१॥ ज्ञानं तेऽहं सविज्ञा
नमिदं वक्ष्याम्यशेषतः ॥ यज्ज्ञात्वा नेह भू
योऽन्यज्ज्ञातव्यमवशिष्यते ॥२॥ मनुष्याणां
सहस्रेषु कश्चिद्यतति सिद्धये ॥ यततामपि
सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥ भूमि
रापोऽनलो वायुः खं मनो बुद्धिरेव च ॥ अ

हङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥
॥ ५ ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधार
य ॥ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्त
था ॥ ६ ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति ध
नञ्जय ॥ मयि सर्वमिदंप्रोतं सूत्रे मणिगणा
इव ॥ ७ ॥ रसोऽहमप्सु कौन्तेय प्रभास्मि श

व सात्विका भावा राजसास्तामसाश्च ये ॥
मत्त एवेति तान्विद्धि नत्वहं तेषु ते मयि ॥१२॥
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥ मो
हितं नाभिजानाति मामेभ्यः परमव्ययम् ।१३।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मा
मेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥
माययापहृतज्ञाना आसुरम्भावमाश्रिताः।१५।

माययापहृतज्ञाना आसुरंभावमाश्रिताः॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जु
न ॥ आर्त्तो जिज्ञासुरर्थार्थी ज्ञानीच भरतर्ष
भ ॥१६॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशि
ष्यते ॥ प्रियो हि ज्ञानिनोत्यर्थमहं स च मम
प्रियः ॥१७॥ उदाराःसर्व एवैते ज्ञानीत्वात्मै
व मे मतम् ॥ आस्थितः सहि युक्तात्मा मा
मेवानुत्तमां गतिम् ॥१८॥ बहूनां जन्मनामन्ते
ज्ञानवान्मां प्रपद्यते ॥ वासुदेवःसर्वमिति स

महात्मासुदुर्लभः ॥१९॥ कामैस्तैस्तैर्हृतज्ञानाः
प्रपद्यन्तेऽन्यदेवताः ॥ तं तं नियममास्थाय
प्रकृत्या नियताः स्वया ॥ २० ॥ यो यो यां यां
तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥ तस्य तस्याऽ
चलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥ स
तया श्रद्धया युक्तस्तस्याराधनमीहते ॥ लभते
च ततः कामान् मयैव विहितान् हितान् ॥२२॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥

देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि
॥२३॥ अव्यक्तंव्यक्तिमापन्नं मन्यन्ते मामबुद्ध
यः ॥ परं भावमजानन्तो ममाव्ययमनुत्तमम्
॥२४॥ नाहं प्रकाशः सर्वस्य योगमायासमावृ
तः ॥ मूढोऽयं नाभिजानाति लोको मामजम
व्ययम्॥२५॥ वेदाहं समतीतानि वर्तमानानि
चार्जुन ॥ भविष्याणि च भूतानि मां तु वेद
न कश्चन ॥२६॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमो

हेन भारत ॥ सर्वभूतानि संमोहं सर्गे यान्ति
परन्तप ॥२७॥ येषां त्वन्तगतं पापं जनानां
पुण्यकर्मणाम् ॥ ते द्वन्द्वमोहनिर्मुक्ता भजन्ते
मां दृढव्रताः ॥ २८ ॥ जरामरणमोक्षाय मा
माश्रित्य यतन्ति ये ॥ ते ब्रह्म तद्विदः कृत्स्न
मध्यात्मं कर्म चाऽखिलम् ॥२९॥ साधिभूता
धिदैवं मां साधियज्ञं च ये विदुः ॥ प्रयाण
कालेपि च मां ते विदुर्युक्त चेतसः ॥ ३० ।

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्या
यां योगशास्त्रे श्रीकृष्णार्जुन संवादे ज्ञानवि
ज्ञनयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥
अर्जुन उवाच ॥ किं तद्ब्रह्म किमध्यात्मं किं
कर्म पुरुषोत्तम ॥ अधिभूतं च किं प्रोक्तम
धिदैवं किमुच्यते ॥ १ ॥ अधियज्ञः कथं कोत्र
देहेऽस्मिन्मधुसूदन ॥ प्रयाणकाले च कथं ज्ञे
योऽसि नियतात्मभिः ॥२॥ श्रीभगवानुवाच ॥

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥
भूतभावोद्भवकरो विसर्गःकर्मसंज्ञितः ॥ ३ ॥
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥
अधियज्ञोऽहमेवात्र देहे देहेभृतांवर ॥ ४ ॥
अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥
यः प्रयाति समद्भावं याति नास्त्यत्र संशयः ॥
॥ ५ ॥ यं यं वापि स्मरन् भावं त्यजत्यन्
कलेवरम् ॥ तं तमेवैति कौन्तेय सदा तद्भा

भावितः ॥ ६ ॥ तस्मात्सर्वेषु कालेषु मामनुस्म
र युध्य च ॥ मय्यर्पितमनोबुद्धिर्मामेवैष्यस्य
संशयम् ॥ ७ ॥ अभ्यासयोगयुक्तेन चेतसा ना
न्यगामिना ॥ परमं पुरुषं दिव्यं याति पार्था
नुचिन्तयन् ॥ ८ ॥ कविंपुराणमनुशासितारम
णोरणीयांसमनुस्मरेद्यः ॥ सर्वस्य धातारम
चिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥
प्रयाण काले मनसा चलेन भक्त्या युक्तो यो

गबलेन चैव ॥ भ्रुवोर्मध्ये प्राणमावेश्य स
म्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥
यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो
वीतरागाः ॥ यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥ सर्वद्वाराणि
संयम्य मनो हृदि निरुध्य च ॥ मूर्ध्न्याधाया
त्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥ ओ
मित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।

यः प्रयाति त्यजन् देहं स याति परमां ग
तिम् ॥ १३ ॥ अनन्यचेताः सततं यो मां स्म
रति नित्यशः ॥ तस्याहं सुलभः पार्थ नित्य
युक्तस्य योगिनः ॥ १४ ॥ मामुपेत्य पुर्जन्म दुः
खालयमशाश्वतम् ॥ नाप्नुवन्ति महात्मानः
संसिद्धिं परमां गताः ॥ १५ ॥ आ ब्रह्मभुवना
ल्लोकाः पुनरावर्तिनोऽर्जुन ॥ मामुपेत्यतु कौ
न्तेय पुनर्जन्म न विद्यते ॥ १६ ॥ सहस्रयुग

० पर्यन्तमहर्यद्ब्रह्मणो विदुः॥रात्रिं युगसहस्रां
तां तेऽहोरात्रविदो जनाः ॥१७॥ अव्यक्ताद्व्य
११ क्तयः सर्वाः प्रभवन्त्यहरागमे ॥ रात्र्यागमे प्र
लीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥ भूतग्रामः स
एवायं भूत्वा भूत्वा प्रलीयते ॥ रात्र्यागमे
वशः पार्थ प्रभवत्यहरागमे ॥१९॥ परस्तस्म
त्तु भावोन्यो व्यक्तोऽव्यक्तात्सनातनः ॥ यः
सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २०

ब्रह्मविदो जनाः ॥ २४ ॥ धूमोरात्रिस्तथा
कृष्णः षण्मासा दक्षिणायनम् ॥ तत्र चान्द्र
मसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥ २५ ॥ शुक्ल
कृष्णे गती ह्येते जगतः शाश्वते मते ॥ एक
या यात्यनावृत्तिमन्ययावर्ततेपुनः ॥ २६ ॥
नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ॥
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन॥२७॥
वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं

मम् ॥ प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्
॥ २ ॥ अश्रद्दधानाः पुरुषा धर्मस्यास्य पर
न्तप ॥ अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्म
नि ॥ ३ ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्ति
ना ॥ मत्स्थानि सर्वभूतानि न चाहं तेष्व
वस्थितः ॥ ४ ॥ न च मत्स्थानि भूतानि पश्य
मे योगमैश्वरम् ॥ भूतभृन्न च भूतस्थो ममा
त्मा भूतभावनः ॥ ५ ॥ यथाऽऽकाशस्थितो

नित्यं वायुः सर्वत्रगो महान् ॥ तथा सर्वाणि
भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥ सर्वभूता
नि कौन्तेय प्रकृतिं यान्ति मामिकाम् ॥ क
ल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥
॥ ७ ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः
पुनः ॥ भूतग्राममिमंकृत्स्नमवशंप्रकृतेर्वशात्
॥८॥ नच मां तानि कर्माणि निवध्नन्ति ध
नञ्जय ॥ उदासीनवदासीनमसक्तं तेषु कर्म

सु ॥ ९ ॥ मयाऽध्यक्षेण प्रकृतिः सूयते सचरा
चरम् ॥ हेतुनानेन कौन्तेय जगद्विपरिवर्त
ते ॥ १० ॥ अवजानन्ति मां मूढा मानुषीं त
नुमाश्रितम् ॥ परं भावमजानन्तो मम भूत
महेश्वरम् ॥ ११ ॥ मोघाशामोघकर्माणो मोघ
ज्ञानाविचेतसः ॥ राक्षसीमासुरीं चैव प्रकृतिं
मोहिनीं श्रिताः ॥ १२ ॥ महात्मानस्तु मां
पार्थ दैवीं प्रकृतिमाश्रिताः ॥ भजन्त्यनन्यम

नसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥ सततं
कीर्तयन्तो मां यतन्तश्च दृढव्रताः ॥ नमस्य
न्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥
ज्ञान यज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥
॥ १५ ॥ अहंक्रतुरहं यज्ञः स्वधाहमहमौष
धम् ॥ मन्त्रोहमहमेवाज्यमहमग्निरहंहुतम्
॥१६॥ पिताहमस्य जगतो माता धाता पि

सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥ नतु माम ७
भिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥ या ६
न्ति देवव्रता देवान् पितॄन्यान्तिपितृव्रताः ॥
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽ
पिमाम् ॥२५॥ पत्रं पुष्पं फलं तोयं यो मे भ
क्त्याप्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि
प्रयतात्मनः ॥२६॥ यत्करोषि यदश्नासि यज्जु
होषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय त

निगच्छति ॥ कौन्तेय प्रतिजानीहि न मे भ
क्तः प्रणश्यति ॥ ३१ ॥ मां हि पार्थ व्यपाश्रित्य
येऽपिस्युः पापयोनयः ॥ स्त्रियो वैश्यास्तथा
शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥ किं
पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्
॥ ३३ ॥ मन्मना भव मद्भक्तो मद्याजी मां नम
स्कुरु ॥ मामेवैष्यसि युक्त्वैवमात्मानंमत्परा

वेत्ति लोकमहेश्वरम् ॥ असम्मू
र्तु सर्वपापैः प्रमुच्यते ॥ ३ ॥ बुद्धि
र्ज्ञानमसं ःक्षमा सत्यं दमः शमः ॥ सुखं
दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः
॥ ५ ॥ महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः

---

॥ ६ ॥

येन मामुपयान्ति ते ॥१०॥ तेषामेवानुकम्पा
र्थमहमज्ञानजं तमः ॥ नाशयाम्यात्मभावस्थं
ज्ञानदीपेन भास्वता ॥११॥ अर्जुन उवाच ।
परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजंविभुम्॥१२।
अहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥ अ
सितो देवलो व्यासःस्वयं चैव ब्रवीषि मे ।
॥१३॥ सर्वमेतदृतं मन्ये यन्मां वदसि केश

व ॥ नहि ते

नो योगं विभूतिं च जनार्दन ॥ भूयः कथ
य तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ ॥१८॥
॥ श्रीभगवानुवाच ॥ हन्त ते कथयिष्या
मि दिव्या ह्यात्मविभूतयः ॥ प्राधान्यतः कु
रुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥ अह
मात्मा गुडाकेश सर्वभूताशयस्थितः ॥ अह
मादिश्च मध्यं च भूतानामन्त एव च ॥२०॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमा

न् ॥ मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी
॥२१॥ वेदानां सामवेदोऽस्मि देवानामस्मि
वासवः ॥ इन्द्रियाणां मनश्चास्मि भूतानाम
स्मि चेतना ॥ २२ ॥ रुद्राणां शङ्करश्चास्मि
वित्तेशो यक्षरक्षसाम् ॥ वसूनां पावकश्चा
स्मि मेरुः शिखरिणामहम् ॥२३॥ पुरोधसां
च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥ सेना
नीनामहंस्कन्दः सरसामस्मि सागरः ॥२४॥

हर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमाल
यः ॥ २५ ॥ अश्वत्थः सर्ववृक्षाणां देवर्षीणां
च नारदः ॥ गन्धर्वाणां चित्ररथः सिद्धानां
कपिलो मुनिः ॥२६॥ उच्चैःश्रवसमश्वानां विद्धि
मामसृतोद्भवम् ॥ ऐरावतं गजेन्द्राणां नराणां
च नराधिपम् ॥ २७ ॥ आयुधानामहं वज्रं
धेनूनामस्मि कामधुक् ॥ प्रजनश्चास्मि कन्द

पः सर्पाणामस्मि वासुकिः ॥२८॥ अनन्तश्चा
स्मि नागानां वरुणो यादसामहम् ॥ पितॄ
णामर्यमा चास्मि यमःसंयमतामहम् ॥२९॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामह
म् ॥ मृगाणां च मृगेन्द्रोहं वैनतेयश्च पक्षि
णाम् ॥३०॥ पवनः पवतामस्मि रामः शस्त्र
भृतामहम् ॥ झपाणां मकरश्चास्मि स्रोतसा
मस्मि जाह्नवी ॥ ३१ ॥ सर्गाणामादिरन्तश्च

०  मध्यं चैवाहमर्जुन ॥ अध्यात्मविद्याविद्यानां
२  वादःप्रवदतामहम् ॥ ३२ ॥ अक्षराणामकारोऽ
स्मि द्वन्द्वः सामासिकस्य च ॥ अहमेवाक्षयः
कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥ मृत्युः
सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥ कीर्तिः
श्रीर्वाक्चनारीणां स्मृतिर्मेधा धृतिःक्षमा ।३४।
बृहत्साम तथा साम्नां गायत्री छन्दसामहम्॥
मासानां मार्गशीर्षोहमृतूनां कुसुमाकरः ॥

॥ ३५ ॥ द्यूतं छलयतामस्मि तेजस्तेजस्विना
महम् ॥ जयोस्मि व्यवसायोऽस्मि सत्त्वं स
त्त्ववतामहम् ॥ ३६ ॥ वृष्णीनां वासुदेवोऽस्मि
पाण्डवानां धनञ्जयः ॥ मुनीनामप्यहं व्यासः
कवीनामुशना कविः ॥ ३७ ॥ दण्डो दमयता
मस्मि नीतिरस्मि जिगीषताम् ॥ मौनं चैवा
स्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥
यच्चापि सर्वभूतानां वीजं तदहमर्जुन ॥ नत

दस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्त
प ॥ एष तूद्देशतः प्रोक्तोविभूतेर्विस्तरो मया
॥ ४० ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव
वा ॥ तत्तदेवावगच्छ त्वं मम तेजोंशसम्भव
म् ॥४१॥ अथ वा बहुनैतेन किं ज्ञानेन त
वार्जुन ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थि
तो जगत् ॥४२॥ इति श्रीमद्भगवद्गीतासूपनिष

त्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसं
वादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥
अर्जुन उवाच ॥ मदनुग्रहाय परमं गुह्यम
ध्यात्मसंज्ञितम् ॥ यत्त्वयोक्तं वचस्तेन मोहोऽ
यं विगतो मम ॥ १ ॥ भवाप्ययौ हि भूतानां
श्रुतौ विस्तरशो मया ॥ त्वत्तः कमलपत्राक्ष मा
हात्म्यमपि चाव्ययम् ॥ २ ॥ एवमेतद्यथात्थ
त्वमात्मानं परमेश्वर ॥ द्रष्टुमिच्छामि ते रू

पमेश्वरं पुरुषोत्तम ॥३॥ मन्यसे यदि तच्छक्यं
मया द्रष्टुमिति प्रभो ॥ योगेश्वर ततो मे त्वं
दर्शयात्मानमव्ययम् ॥४॥ श्रीभगवानुवाच ॥
पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः ॥
नानाविधानि दिव्यानि नानावर्णाकृतीनि च
॥५॥ पश्यादित्यान् वसून्रुद्रानश्विनौ मरुत
स्तथा ॥ बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भा
रत ॥६॥ इहैकस्थंजगत् कृत्स्नं पश्याद्य सच

राचरम् ॥ मम देहे गुडाकेश यच्चान्यद्द्रष्टुमि
च्छसि ॥७॥ न तु मां शक्यसे द्रष्टुमनेनैव स्व
चक्षुषा ॥ दिव्यं ददामि ते चक्षुः पश्य मे
योगमैश्वरम् ॥८॥ ॥ संजय उवाच ॥ एवमु
क्त्वा ततो राजन् महायोगेश्वरो हरिः ॥ द
र्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥ अनेक
दिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

परमेश्वरं पुरुषोत्तम ॥३॥ मन्यसे यदि तच्छक्यं
मया द्रष्टुमिति प्रभो ॥ योगेश्वर ततो मे त्वं
दर्शयात्मानमव्ययम् ॥४॥ श्रीभगवानुवाच ॥
पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः ॥
नानाविधानि दिव्यानि नानावर्णाकृतीनि च
॥५॥ पश्यादित्यान् वसून्रुद्रानश्विनौ मरुत
स्तथा ॥ बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भा
रत ॥६॥ इहैकस्थंजगत् कृत्स्नं पश्याद्य सच

राचरम् ॥ मम देहे गुडाकेश यच्चान्यद्द्रष्टुमि
च्छसि ॥७॥ न तु मां शक्यसे द्रष्टुमनेनैव स्व
चक्षुषा ॥ दिव्यं ददामि ते चक्षुः पश्य मे
योगमैश्वरम् ॥८॥ ॥ संजय उवाच ॥ एवमु
क्त्वा ततो राजन् महायोगेश्वरो हरिः ॥ द
र्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥
नेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥ अनेक
ाभरणं दिव्यानेकोद्यतायुधम् ॥१०॥

० दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥
५ सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ।११।
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥ यदि
भाः सदृशी सा स्याद्भासस्तस्य महात्मनः
॥ १२ ॥ तत्रैकस्थंजगत् कृत्स्नं प्रविभक्तमने
कधा ॥ अपश्यद्देवदेवस्य शरीरे पाण्डव
स्तदा ॥१३ ॥ ततः सविस्मयाविष्टो हृष्टरोमा
धनञ्जयः ॥ प्रणम्य शिरसा देवं कृताञ्जलि

रभापत ॥ १४ ॥ अर्जुन उवाच ॥ पश्यामि
देवांस्तव देव देहे सर्वांस्तथा भूतविशेषस
ङ्घान् ॥ ब्रह्माणमीशं कमलासनस्थमृषींश्च
सर्वानुरगांश्च दिव्यान् ॥१५॥ अनेकबाहूद
रवक्त्रनेत्रं पश्यामि त्वां सर्वतोनन्तरूपम् ॥
नान्तं न मध्यं न पुनस्तवादिं पश्यामि वि
श्वेश्वर विश्वरूपम् ॥१६॥ किरीटिनंगदिनं
चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ॥

ग्रन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥ यथाप्र
दीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृ
द्धवेगाः ॥ तथैव नाशाय विशन्ति लोकास्त
वापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥ लेलिह्य
से ग्रसमानः समन्ताल्लोकान् समग्रान् वदनै
र्ज्वलद्भिः ॥ तेजोभिरापूर्य जगत्समग्रंभासस्त
वोग्राः प्रतपन्ति विष्णो ॥ ३० ॥ आख्याहि मे
को भवानुग्ररूपो नमोस्तुते देववरप्रसीद ॥

द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्या
नपियोधवीरान् ॥ मया हतांस्त्वं जहि मा
व्यथिष्ठा युद्धयस्व जेतासि रणे सपत्नान् ॥
॥३४॥ सञ्जय उवाच ॥ एतच्छ्रुत्वा वचनं केश
वस्य कृताञ्जलिर्वेपमानः किरीटी ॥ नमस्कृ
त्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्र
णम्य ॥ ३५ ॥ अर्जुन उवाच ॥ स्थाने हृषी
केश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥

रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्य
न्ति च सिद्धसङ्घाः ॥३६॥ कस्माच्च ते न नमे
रन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ॥
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्त
त्परं यत् ॥३७॥ त्वमादिदेवः पुरुषः पुराण
स्त्वमस्य विश्वस्य परंनिधानम् ॥ वेत्ताऽसि
वेद्यं च परं च धाम त्वयाततं विश्वमनन्त
रुप ॥३८॥ वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्र

तिस्त्वं प्रपितामहश्च ॥ नमोनमस्तेऽ
सहस्रकृत्वः पुनश्च भूयोपि नमो नम
स्ते ॥ ३९ ॥ नमः पुरस्तादथ पृष्ठतस्ते नमो
स्तु ते सर्वत एव सर्व ॥ अनन्तवीर्यामित
विक्रमस्त्वं सर्वं समाप्नोपि ततोऽसि सर्व ॥
॥ ४० ॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण
हे यादव हे सखेति ॥ अजानता महिमानं
तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥

यच्चावहासार्थमसत्कृतोसि विहारशय्यासन
भोजनेषु ॥ एकोथ वाप्यच्युत तत्समक्षं त
त्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥ पितासि
लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्ग
रीयान् ॥ न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेप्यप्रतिमप्रभावः ॥ ४३ ॥ तस्मात्प्रण
म्य प्रणिधाय कायं प्रसादये त्वामहमीशमी
ड्यम् ॥ पितेव पुत्रस्य सखेव सख्युः प्रियः

जापतिस्त्वं प्रपितामहश्च ॥ नमोनमस्तेऽ
स्तु सहस्रकृत्वः पुनश्च भूयोपि नमो नम
स्ते ॥ ३९ ॥ नमः पुरस्तादथ पृष्ठतस्ते नम
स्तु ते सर्वत एव सर्व ॥ अनन्तवीर्यामित
विक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्व
॥ ४० ॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष
हे यादव हे सखेति ॥ अजानता महिमा
तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४

यच्चावहासार्थमसत्कृतोसि विहारशय्यासन
भोजनेपु ॥ एकोथ वाप्यच्युत तत्समक्षं त
त्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥ पितासि
लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्ग
रीयान् ॥ न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेप्यप्रतिमप्रभावः ॥ ४३ ॥ तस्मात्प्रण
म्य प्रणिधाय कायं प्रसादये त्वामहमीशमी
ड्यम् ॥ पितेव पुत्रस्य सखेव सख्युः प्रियः

प्रियायार्हसि देव सोढुम् ॥४४॥ अदृष्टपूर्वं हृ
षितोस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ॥
तदेव मे दर्शय देव रूपं प्रसीद देवेश जग
न्निवास ॥ ४५ ॥ किरीटिनं गदिनं चक्रहस्त
मिच्छामि त्वां द्रष्टुमहं तथैव ॥ तेनैवरूपेण
चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥
श्रीभगवानुवाच ॥ मयाप्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ॥ तेजोमयं विश्व

मनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥
न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न त
पोभिरुग्रैः ॥ एवंरूपः शक्य अहं नृलोके द्र
ष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥ मा ते व्यथा
मा च विमूढभावो दृष्ट्वा रूपंघोरमीदृङ्ममे
दम् ॥ व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे
रूपमिदं प्रपश्य ॥४९॥ सञ्जय उवाच ॥ इत्यर्जु
नं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास

।० भूयः ॥ आश्वासयामास च भीतमेनं भूत्वा
७२ पुनः सौम्यवपुर्महात्मा ॥५०॥ अर्जुन उवाच ॥
दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ॥ इ
दानीमस्मि संवृत्तः सचेताःप्रकृतिं गतः ॥५१॥
श्रीभगवानुवाच ॥ सुदुर्दर्शमिदं रूपं दृष्टवा
नसि यन्मम ॥ देवा अप्यस्य रूपस्य नित्यं
दर्शनकाङ्क्षिणः ॥५२॥ नाहं वेदैर्न तपसा न
दानेन न चेज्यया ॥ शक्य एवंविधोद्रष्टुं द्र

ष्टवानसि मां यथा ॥५३॥ भक्त्या त्वनन्यया
शक्यो ह्यहमेवंविधोऽर्जुन ॥ ज्ञातुं द्रष्टुं च त
त्त्वेन प्रवेष्टुं च परन्तप ॥५४॥ मत्कर्मकृन्मत्प
रमो मद्भक्तः सङ्गवर्जितः ॥ निर्वैरः सर्वभूतेषु
यः स मामेति पाण्डव ॥ ५५ ॥ इति श्रीमद्भ
गवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशा
स्त्रेश्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो
नाम एकादशोऽध्यायः ॥ ११ ॥ ॥ ॥

गी० अर्जुन उवाच ॥ एवं सततयुक्ताये भक्तास्
पर्युपासते ॥ ये चाऽप्यक्षरमव्यक्तं तेषां
७३ योगवित्तमाः ॥१॥ श्रीभगवानुवाच ॥ म
वेश्य मनो ये मां नित्ययुक्ता उपासते
द्धया परयोपेतास्तेमे युक्ततमा मताः
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते
...चिन्त्यं च कूटस्थमचलं ध्रुवम्
... समबुद्धयः

पुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥ क्ले
शोधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥ अव्य
क्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥ ये
तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥ भ
वामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥

निवसिष्यसि मय्येव अतऊर्ध्वं न संशयः॥८
अथ चित्तं समाधातुं न शक्नोपि मयि स्थि
रम्॥ अभ्यासयोगेन ततो मामिच्छाप्तुं ध
ञ्जय॥९॥ अभ्यासेप्यसमर्थोसि मत्कर्मपर
भव॥ मदर्थमपि कर्माणि कुर्वन् सिद्धिमव
प्स्यसि॥१०॥ अथैतदप्यशक्तोसि कर्त्तुं मद
गमाश्रितः॥ सर्वकर्मफलत्यागं ततः कु
यतात्मवान्॥११॥ श्रेयो हि ज्ञानमभ्यास

यः ॥१५॥ अनपेक्षः शुचिर्दक्ष उदासीनो ग
तव्यथः ॥ सर्वारम्भपरित्यागी योमद्भक्तः स
मे प्रियः ॥१६॥ योन हृष्यति न द्वेष्टि न शो
चति न काङ्क्षति ॥ शुभाशुभपरित्यागी भक्ति
मान् यः स मे प्रियः ॥ १७ ॥ समःशत्रौ च
मित्रे च तथामानापमानयोः ॥ शीतोष्णसु
खदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥ तुल्य
निन्दास्तुतिर्मौनी संतुष्टो येन केन चित्॥ अ

निकेतः स्थिरमतिर्भक्तिमान्मे प्रियोनरः ॥१९॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ॥ श्र
द्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।२०।
इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्या
यां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियो
गोनाम द्वादशोऽध्यायः ॥ १२ ॥
श्रीभगवानुवाच ॥ इदं शरीरं कौन्तेय क्षेत्र
मित्यभिधीयते ॥ एतद्यो वेत्ति तंप्राहुःक्षेत्रज्ञ

मिति तद्विदः ॥१॥ क्षेत्रज्ञं चापि मां विद्धि
सर्वक्षेत्रेषु भारत ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्त
ज्ज्ञानं मतं मम ॥२॥ तत्क्षेत्रं यच्च यादृक्
च यद्विकारि यतश्च यत् ॥ स च योयत्प्र
भावश्च तत्समासेन मे शृणु ॥३॥ ऋषिभि
र्बहुधागीतं छन्दोभिर्विविधैः पृथक् ॥ ब्रह्म
सूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥ म
हाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च॥ इन्द्रि

याणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥
इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ॥
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६॥
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्॥
आचार्योपासनंशौचं स्थैर्यमात्मविनिग्रहः ।७
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ॥ ज
न्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ॥ नि

त्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
९ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा
॥११॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतम
श्नुते ॥ अनादिमत्परं ब्रह्म न सत्तन्नासदु
च्यते ॥ १२ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षि

शिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृ
त्यतिष्ठति ॥ १३ ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रि
यविवर्जितम् ॥ असक्तं सर्वभृच्चैव निर्गुणं गु
णभोक्तृ च ॥ १४ ॥ बहिरन्तश्च भूतानामचरं
चरमेव च ॥ सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चा
न्तिके च तत् ॥ १५ ॥ अविभक्तं च भूतेषु वि
भक्तमिव चस्थितम् ॥ भूतभर्तृ च तज्ज्ञेयं
ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥ ज्योतिषामपि

तज्ज्योतिस्तमसः परमुच्यते ॥ ज्ञानं ज्ञेयं
नगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥ इ
क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥
क्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥
कृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥
कारांश्च गुणांश्चैव विद्धिप्रकृतिसंभवान् ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥ पुरु

... हेतुरुच्यते ॥२०॥ पुरुषः

प्रकृतिस्थोहि भुङ्क्ते प्रकृतिजान् गुणान् ॥
कारणंगुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥
उपद्रष्टानुमन्ता च भर्ताभोक्ता महेश्वरः ॥ पर
मात्मेति चाप्युक्तो देहेस्मिन्पुरुषः परः ॥२२॥
य एवं वेत्ति पुरुषं प्रकृतिंच गुणैः सह ॥ सर्व
थावर्तमानोऽपि न स भूयोऽभिजायते ॥ २३॥
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्म
ना ॥ अन्येसांख्येन योगेन कर्मयोगेन चाप

रे ॥२४॥ अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य
उपासते ॥ तेऽपि चातितरन्त्येव मृत्युं श्रुति
परायणाः ॥२५॥ यावत्संजायते किञ्चित्सत्त्वं
स्थावरजङ्गमम् ॥ क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि
भरतर्षभ ॥२६॥ समं सर्वेषु भूतेषु तिष्ठन्तं प
रमेश्वरम् ॥ विनश्यत्स्वविनश्यन्तं यः पश्य
ति स पश्यति ॥२७॥ समं पश्यन् हि सर्व
त्र समवस्थितमीश्वरम् ॥ न हिनस्त्यात्मना

त्र समवस्थितमीश्वरम् ॥ न हिनस्त्यात्मनात्म

त्मानं ततो याति परां गतिम् ॥ २८ ॥ प्रकृ
त्यैव च कर्माणि क्रियमाणानि सर्वशः ॥ यः
पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥ तत
एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ॥
शरीरस्थोऽपि कौन्तेय न करोति न लिप्य
ते ॥ ३१ ॥ यथा सर्वगतं सौक्ष्म्यादाकाशं नो

पलिप्यते ॥ सर्वत्रावस्थितो देहे तथात्मा
नोपलिप्यते ॥ ३२॥ यथा प्रकाशयत्येकः कृत्स्नं
लोकमिमं रविः ॥ क्षेत्रं क्षेत्री तथा कृत्स्नं
प्रकाशयति भारत ॥ ३३ ॥ क्षेत्रक्षेत्रज्ञयोरेव
मन्तरं ज्ञानचक्षुषा ॥ भूतप्रकृतिमोक्षं च ये
विदुर्यान्ति ते परम् ॥ ३४ ॥ इति श्रीमद्भगव
द्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो

नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥
श्रीभगवानुवाच ॥ परं भूयः प्रवक्ष्यामि ज्ञा
नानांज्ञानमुत्तमम् ॥ यज्ज्ञात्वा मुनयः सर्वे
परां सिद्धिमितो गताः ॥ १ ॥ इदं ज्ञानमु
पाश्रित्य मम साधर्म्यमागताः ॥ सर्गेऽपि
नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥ मम
योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥ संभ
वः सर्वभूतानां ततो भवति भारत ॥३॥ स

१० र्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ॥ ता
२१ सां ब्रह्म महद्योनिरहं वीजप्रदः पिता ॥ ४ ॥
सत्त्वं रजस्तम इति गुणाः प्रकृति संभवाः ॥
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥
रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ॥
तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनाम् ॥

॥ ७ ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्व दे
हिनाम् ॥प्रमादालस्यनिद्राभिस्तं निवध्नाति
भातर ॥ ८॥ सत्त्वं सुखे सञ्जयति रजः कर्म
णि भारत ॥ ज्ञानमावृत्य तु तमः प्रमादे
संजयत्युत ॥ ९ ॥ रजस्तमश्चाभिभूय सत्त्वं
भवति भारत ॥ रजः सत्त्वं तमश्चैव तमः
सत्त्वं रजस्तथा ॥ १० ॥ सर्वद्वारेषु देहेऽ
स्मिन् प्रकाश उपजायते॥ ज्ञानं यदा तदा

विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥ लोभः
प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥ रज
स्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥
॥ १३ ॥ यदा सत्त्वे प्रवृद्धे तु प्रलयं याति दे
हभृत् ॥ तदोत्तमविदां लोकानमलान्प्रति
पद्यते ॥ १४ ॥ रजसि प्रलयं गत्वा कर्म सं

गिषु जायते ॥ तथा प्रलीनस्तमसि मूढया
निषु जायते ॥१५॥ कर्मणः सुकृतस्याहुः सा
त्विकं निर्मलं फलम् ॥ रजसस्तु फलं दुःख
मज्ञानं तमसः फलम् ॥१६॥ सत्त्वात्संजाय
ते ज्ञानं रजसो लोभ एव च ॥ प्रमादमोहौ
तमसो भवतोऽज्ञानमेव च॥१७॥ ऊर्ध्वं गच्छ
न्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥ जघ
न्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥१८॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥
स गुणान् समतीत्यैतान् ब्रह्म भूयाय कल्प
ते ॥ २६ ॥ ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्यय
स्य च ॥ शाश्वतस्य च धर्मस्य सुखस्यैकान्ति
कस्य च ॥ २७ ॥ इति श्रीमद्भगवद्गीतासूप
निषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा
र्जुनसंवादे गुणत्रयविभागयोगो नाम चतु
र्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ ॥

श्रीभगवानुवाच ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं
प्राहुरव्ययम् ॥ छन्दांसि यस्य पर्णानि यस्तं
वेद स वेदवित् ॥ १ ॥ अधश्चोर्ध्वं प्रसृता
स्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ॥
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि
मनुष्यलोके ॥२॥ न रूपमस्येह तथोपलभ्य
ते नान्तो न चादिर्न च संप्रतिष्ठा ॥ अश्व
त्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छि

त्वा ॥ ३ ॥ ततः पदं तत्परिमार्गितव्यं यस्मिन्
गता न निवर्तन्ति भूयः ॥ तमेवचाद्यं पुरुषं प्र
पद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥ नि
र्मानमोहा जितसङ्गदोषा अध्यात्मनित्याविनि
निवृत्तकामाः ॥ द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥ न तद्भा
सयते सूर्यो न शशाङ्को न पावकः ॥ यद्गत्वा
न निर्तन्ते तद्धाम परमं मम ॥ ६ ॥ ममैवांशो

जीवलोके जीवभूतः सनातनः ॥ मनःषष्ठा
नीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥ श
रीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥ गृ
हीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥
॥ ८ ॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव
च ॥ अधिष्ठाय मनश्चायं विषयानुपसेवते
॥ ९ ॥ उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणा
न्वितम् ॥ विमूढा नानुपश्यन्ति पश्यन्ति ज्ञा

: ॥१०॥ यतन्तोयोगिनश्चैनं पश्यन्त्या
मन्यवस्थितम्॥ यतन्तोऽप्यकृतात्मानो नैनं
पश्यन्त्यचेतसः ॥ ११ ॥ यदादित्यगतं तेजो
जगद्भासयतेऽखिलम् ॥ यच्चन्द्रमसि यच्चाग्नौ
तत्तेजो विद्धि मामकम् ॥ १२ ॥ गामाविश्य
च भूतानि धारयाम्यहमोजसा ॥ पुष्णामि
चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥
॥ १४ ॥ सर्वस्य चाहं हृदि संनिविष्टो मत्तः
स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वैरहमेव
वेद्यो वेदान्तकृद्वेदविदेवचाहम् ।। १५ ॥ द्वा
विमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते
॥ १६ ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदा
हृतः ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय

० ईश्वरः ॥ १७ ॥ यस्मात्क्षरमतीतोहमक्षराद
७ पिचोत्तमः ॥ अतोस्मि लोके वेदे च प्रथितः
पुरुषोत्तमः ॥१८॥ यो मामेवमसंमूढो जाना
ति पुरुषोत्तमम् ॥ स सर्वविद्भजति मां सर्वभा
वेन भारत ॥१९॥ इति गुह्यतमं शास्त्रमिद
सुक्तंमयाऽनघ॥ एतद्बुध्वा बुद्धिमान् स्यात्कृ
तकृत्यश्च भारत ॥ २० ॥ ॐतत्सदिति श्री
मद्भगवद्गीतासूप० पुराणपुरुषोत्तमयोगोनाम

षतः क्रूरान् संसारेषु नराधमान् ॥ क्षिपाम्य
जस्रमशुभानासुरीष्वेव योनिषु ॥१९॥ आसु
रीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मा
मप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्
॥ २०॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्म
नः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं
त्यजेत् ॥ २१ ॥ एतैर्विमुक्तः कौन्तेय तमोद्वारै
स्त्रिभिर्नरः ॥ आचरत्यात्मनः श्रेयस्ततो या

गी० जन्ते श्रद्धयान्विताः ॥ तेषां निष्ठा तु का कृष्ण
११ सत्त्वमाहो रजस्तमः ॥१॥ श्रीभगवानुवाच
त्रिविधा भवति श्रद्धा देहिनां सा स्वभ
जा ॥ सात्विकी राजसी चैव तामसी चे
तां शृणु ॥ २ ॥ सत्त्वानुरूपा सर्वस्य श्रद्धा
वति भारत ॥ श्रद्धामयोऽयं पुरुषो योयच्छ्
स एव सः ॥ ३ ॥ यजन्ते सात्विका दे
...न्ति राजसाः ॥ प्रेतान् भूतगणां

गी० रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सा
त्विकप्रियाः ॥८॥ कट्वम्ललवणात्युष्णातीक्ष्ण
१२ रूक्षविदाहिनः ॥ आहारा राजसस्येष्टा दु
खशोकामयप्रदाः ॥९॥ यातयामं गतरसं
तिपर्युषितं च यत् ॥ उच्छिष्टमपिचामे
भोजनं तामसप्रियम् ॥ १० ॥ अफलाका
भिर्यज्ञो विधिदृष्टो य इज्यते ॥ यष्टव्यमेवे
ससात्विकः ॥११॥ अभि

गी० मनः प्रसादः सौम्यत्वं मानमात्मविनिग्रहः ॥
९३ भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥ अ
फलाकाङ्क्षिभिर्युक्तैः सात्विकं परिचक्षते ॥१७॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्॥ क्रि
यते तदिहप्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ॥
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्॥१९॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥ दे
शे काले च पात्रे च तद्दानं सत्विकं स्मृतम् ॥
॥ २० ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा
पुनः ॥ दीयते च परिक्लिष्टं तद्राजससमुदाहृ
तम् ॥ २१ ॥ अदेशकालेयद्दानमपात्रेभ्यश्च
दीयते ॥ असत्कृतमवज्ञातं तत्तामससमुदाहृ
तम् ॥ २२ ॥ ॐ तत्सदिति निर्देशो ब्रह्मण
स्त्रिविधः स्मृतः ॥ ब्राह्मणास्तेन वेदाश्च य

० ज्ञाश्च विहिताःपुरा ॥ २३ ॥ तस्मादोमित्यु प्र
४ दाहृत्य यज्ञदानतपःक्रियाः ॥ प्रवर्तन्ते वि
धानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥ तदि
त्यमभिसंधाय फलं यज्ञतपःक्रियाः ॥ दान
क्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः
॥ २५ ॥ सद्भावे साधुभावे च सदित्येतत्प्रयु
ज्यते ॥ प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ
युज्यते ॥ २६ ॥ यज्ञे तपसि दाने च स्थिति

मदिति चोच्यते ॥ कर्म चैव तदर्थीयं सदि
त्येवाभिधीयते ॥ २७ ॥ अश्रद्धया हुतं दत्तं
तपस्तप्तं कृतं च यत् ॥ असदित्युच्यते पार्थ
न च तत्प्रेत्य नोइह ॥ २८ ॥ इति श्रीमद्भग
वद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगोना
मसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥
अर्जुन उवाच ॥ संन्यासस्य महाबाहो तत्त्व

मिच्छामि वेदितुम् ॥ त्यागस्य च हृषीकेश
पृथक्केशिनिषूदन ॥१॥ श्रीभगवानुवाच ॥ का
म्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥
॥२॥ त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषि
णः ॥ यज्ञदानतपः कर्म न त्याज्यमिति चा
परे ॥ ३ ॥ निश्चयं शृणु मे तत्र त्यागे भरत
सत्तम ॥ त्यागो हि पुरुषव्याघ्र त्रिविधः सं

ोर्तितः ॥ ४ ॥ यज्ञदानतपः कर्म न त्या
ं कार्यमेव तत् ॥ यज्ञो दानं तपश्चैव पा
यनानि मनीषिणाम् ॥ ५ ॥ एतान्यपि तु क
र्माणि संगं त्यक्त्वा फलानि न ॥ कर्तव्यानी
ति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥ निय
तस्य तु संन्यासः कर्मणो नोपपद्यते ॥ मोहा
त्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ॥

स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्
॥८॥ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन॥
संगं त्यक्त्वा फलंचैव स त्यागः सात्त्विको मतः
॥ ९ ॥ न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते ॥
त्यागीसत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥
॥ १० ॥ नहि देहभृता शक्यं त्यक्तुं कर्माण्य
शेषतः ॥ यस्तु कर्मफलत्यागी स त्यागीत्य
भिधीयते ॥ ११ ॥ अनिष्टमिष्टं मिश्रं च त्रिवि

र्धं कर्मणः फलम् ॥ भवत्यत्यागीनां प्रेत्य न
तु संन्यासिनां क्वचित् ॥१२॥ पञ्चैतानि महा
बाहो कारणानि निबोध मे ॥ सांख्ये कृतां
ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥ अ
धिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चम
म् ॥ १४ ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते
नरः ॥ न्याय्यं वा विपरीतं वा पञ्चैते तस्य हे

तवः ॥ १५ ॥ तत्रैवं सति कर्तारमात्मानं के
वलं तु यः ॥ पश्यत्यकृतबुद्धित्वान्न स पश्य
ति दुर्मतिः ॥ १६ ॥ यस्य नाहंकृतो भावो बु
द्धिर्यस्य न लिप्यते ॥ हत्वापि स इमाँल्लोका
न्न हन्ति न निबद्ध्यते ॥१७॥ ज्ञानं ज्ञेयं प
रिज्ञाता त्रिविधा कर्मचोदना ॥ करणं कर्म
कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥ ज्ञानं कर्म
च कर्ता च त्रिधैव गुणभेदतः ॥ प्रोच्यते गुण

गी० कृतम् ॥ अफलप्रेप्सुना कर्म यत्तत्सात्वि
९८ च्यते ॥२३॥ यत्तु कामेप्सुनाकर्म साहङ्क
वा पुनः ॥ क्रियते बहुलायासं तद्राजस
हृतम् ॥२४॥ अनुबन्धंक्षयं हिंसामनवे
पौरुषम् ॥ मोहादारभ्यते कर्म तत्तामस
हृतम्॥२५॥ मुक्तसङ्गो ऽनहंवादी धृत्युत्सा
न्वितः॥सिद्ध्य सिद्ध्योर्निर्विकारः कर्ता

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥
अयथावत्प्रजानाति बुद्धिः सा पार्थ रा
जसी ॥ ३१ ॥ अधर्मं धर्ममिति या मन्यते त
मसावृता ॥ सर्वार्थान्विपरीतांश्च बुद्धिः सा
पार्थ तामसी ॥ ३२ ॥ धृत्या यया धारयते मनः
प्राणेन्द्रियक्रियाः ॥ योगेनाव्यभिचारिण्या
धृतिः सा पार्थ सात्विकी ॥ ३३ ॥ यया तु ध
र्मकामार्थान्धृत्या धारयतेऽर्जुन ॥ प्रसङ्गेन फ

लाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥ य
या स्वप्नं भयं शोकं विषादं मदमेव च ॥ न
विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ।३५॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति
॥ ३६ ॥ यत्तदग्रेविषमिव परिणामेऽमृतोपम
म् ॥ तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसाद
जम् ॥ ३७ ॥ विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृ

तोपमम् ॥ परिणामे विषमिव तत्सुखं राज
सं स्मृतम् ॥ ३८ ॥ यदग्रे चानुबन्धे च सुखं
मोहनमात्मनः ॥ निद्रालस्यप्रमादोत्थं तत्ता
मसमुदाहृतम् ॥ ३९ ॥ न तदस्ति पृथिव्यां
वा दिवि देवेषु वा पुनः ॥ सत्त्वं प्रकृतिजैर्मु
क्तं यदेभिःस्यात्त्रिभिर्गुणैः ॥४० ॥ ब्राह्मणक्ष
त्रियविशां शूद्राणां च परन्तप ॥ कर्माणि
प्रविभक्तानिस्वभावप्रभवैर्गुणैः ॥४१॥ शमो द

मस्तपः शौचं क्षान्तिरार्जवमेव च ॥ ज्ञान
विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ॥
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥
॥४४॥ स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते
१५ नरः ॥ स्वकर्मनिरतः सिद्धिं यथा विन्दति

च्छृणु ॥ ४५ ॥ यतः प्रवृत्तिर्भूतानां येन सर्व
मिदं ततम् ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं वि
न्दति मानवः ॥ ४६ ॥ श्रेयान्स्वधर्मो विगुणः
परधर्मात्स्वनुष्ठितात् ॥ स्वभावनियतं कर्म
कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥ सहजं कर्म कौ
न्तेय सदोषमपि न त्यजेत् ॥ सर्वारम्भा हि
दोषेण धूमेनाग्निरिवावृताः ॥४८॥ असक्तबुद्धिः
सर्वत्र जितात्मा विगतस्पृहः ॥ नैष्कर्म्यसिद्धिं

कामं क्रोधं परिग्रहम् ॥ विमुच्य निर्ममः शा
न्तो ब्रह्मभूयाय कल्पते ॥ ४३ ॥ ब्रह्मभूतः प्रस
न्नात्मा न शोचति न काङ्क्षति ॥ समः सर्वेषु
भूतेषु मद्भक्तिं लभते परां ॥ ५४ ॥ भक्त्या मा
मभिजानाति यावान्यश्चास्मि तत्त्वतः॥ ततो
मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।५६।

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव॥५७॥
मच्चितः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि
॥ ५८ ॥ यदहङ्कारमाश्रित्य न योत्स्य इति
मन्यसे ॥ मिथ्यैप व्यवसायस्ते प्रकृतिस्त्वां
नियोक्ष्यति ॥ ५९ ॥ स्वभावजेन कौन्तेय नि
बद्धः स्वेन कर्मणा ॥ कर्तुं नेचछसि यन्मोहा

त्करिष्यस्यवशोपि तत् ॥ ६० ॥ ईश्वरः सर्व अ
भूतानां हृद्देशेऽर्जुन तिष्ठति ॥ भ्रामयन्स १८
र्वभूतानि यन्त्रारूढानि मायया ॥६१॥ तमेव
शरणं गच्छ सर्वभावेन भारत ॥ तत्प्रसादा
त्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥६२॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु॥६३॥ १९
सर्वगुह्यतमं भूयः शृणु मे परमं वचः॥ इष्टोऽ

सिमेदृढमतिस्ततो वक्ष्यामि ते हितम् ॥६४॥
मन्मना भवमद्भक्तो मद्याजी मां नमस्कुरु ॥ मा
मेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥६५॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वां सर्व पापेभ्यो मोक्षयिष्यामि मा
शुचः ॥ ६६॥ इदं ते नाऽतपस्काय नाभक्ताय
कदाचन॥ न चाशुश्रूषवे वाच्यं न च मां यो
भ्यसूयति ॥ ६७॥ य इदं परमं गुह्यं मद्भक्तेष्व

भिधास्यति ॥ भक्तिं मयि परां कृत्वा मामे
वैष्यत्यसंशयः ॥ ६८ ॥ न च तस्मान्मनुष्येषु
कश्चिन्मे प्रियकृत्तमः॥भविता न च मे तस्मा
दन्यः प्रियतरो भुवि ॥ ६९ ॥ अध्येष्यते च
य इमं धर्म्यं संवादमावयोः ॥ ज्ञानयज्ञेन
तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्म

णाम् ॥ ७१ ॥ कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रे
ण चेतसा ॥ कच्चिदज्ञानसंमोहः प्रणष्टस्ते
धनञ्जय ॥ ७२ ॥ अर्जुन उवाच ॥ नष्टो मोहः
स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ॥ स्थितो
ऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥
सञ्जय उवाच ॥ इत्यहं वासुदेवस्य पार्थस्य च
महात्मनः ॥ संवादमिममश्रौषमद्भुतं रोम
हर्षणम् ॥ ७४ ॥ व्यासप्रसादाच्छ्रुतवानेतद्गुह्य

महं परम् ॥ योगं योगेश्वरात्कृष्णात्साक्षात्क
थयतः स्वयम् ॥ ७५ ॥ राजन् संस्मृत्यसंस्मृ
त्यसंवादमिममद्भुतम्॥ केशवार्जुनयोःपुण्यं
हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥ तच्च संस्मृत्यसं
स्मृत्यरूपमत्यद्भुतंहरेः ॥ विस्मयो मे महा
न्राजन्हृष्यामि च पुनः पुनः॥ ७७॥ यत्र योगे
श्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्री
र्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ ७८॥ इति

कं परायणम् ॥ स्तुवन्तः कं कमर्चन्तः प्राप्नु
युर्मानवाः शुभम् ॥ ४ ॥ को धर्मः सर्वधर्मा
णां भवतः परमो मतः ॥ किं जपन्मुच्यते ज
न्तुर्जन्मसंसारबन्धनात् ॥ ५ ॥ भीष्म उवाच ॥
जगत्प्रभुंदेवदेवमनन्तं पुरुषोत्तमम् ॥ स्तु
वन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ६ ॥
तमेव चार्चयन्नित्यं भक्त्यापुरुषमव्ययम्॥
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेवच॥७॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ॥
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्
॥ ८ ॥ ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिव
र्धनम् ॥ लोकनाथं महद्भूतं सर्वभूतभवोद्भ
वम् ॥ ९ ॥ एष मे सर्वधर्माणां धर्मोऽधिक
तमो मतः ॥ यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चे
न्नरःसदा ॥ १० ॥ परमं यो महत्तेजः परमं यो
१६ महत्तपः ॥ परमं यो महद्ब्रह्म परमं यः परा

यणम् ॥११॥ पवित्राणां पवित्रं यो मङ्गला
नां च मङ्गलम् ॥ दैवतं देवतानां च भूतानां
योऽव्ययः पिता ॥१२॥यतः सर्वाणि भूतानि
भवन्त्यादियुगागमे ॥ यस्मिंश्च प्रलयं या
न्ति पुनरेव युगक्षये ॥१३॥ तस्य लोकप्रधा
नस्य जगन्नाथस्य भूपते ॥ विष्णोर्नामसहस्रं
मेशृणु पापभयापहम् ॥ १४ ॥ यानि नामा
नि गौणानि विख्यातानि महात्मनः ॥ ऋ

षिभिः परिगीतानि तानि वक्ष्यानि भूतये॥१५॥
ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः॥
छन्दोऽनुष्टुप् तथादेवो भगवान् देवकीसुतः
॥१६॥ विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महे
श्वरम्॥ अनेकरूपदैत्यान्तं नमामिपुरुषोत्तम
म्॥ १७॥ अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तो
त्रमन्त्रस्य ॥ भगवान्वेदव्यासऋषिः ॥ अनु
ष्टुप्छन्दः॥ श्रीकृष्णः परमात्मा श्रीमन्नाराय

णो देवता ॥ अमृतांशूद्भवोभानुरिति वीजम्
देवकीनन्दनः स्रष्टेति शक्तिः॥ त्रिसामासामग
सामेति हृदयम् ॥ शङ्खभृन्नन्दकीचक्रीति कीं
लकम् ॥ शार्ङ्गधन्वागदाधर इत्यस्त्रम् ॥ र
थाङ्गपाणिरक्षोभ्य इति कवचम् ॥ उद्भवः क्षो
भणोदेव इति परमो मन्त्रः ॥ श्रीकृष्णप्रीत्य
र्थं सहस्रनामजपेवियोगः ॥ अथकरन्यासः ॥
ॐ उद्भवाय अङ्गुष्ठाभ्यांनमः ॥ ॐ क्षोभणा

य तर्जनीभ्यां नमः ॥ ॐ देवाय मध्यमाभ्यां
नमः ॥ ॐ उद्भवाय अनामिकाभ्यां नमः ॥
ॐ क्षोभणाय कनिष्ठिकाभ्यां नमः ॥ ॐ दे
वाय करतलकरपृष्ठाभ्यां नमः ॥ इति करन्या
सः ॥ सुव्रतः सुमुखः सूक्ष्मः ॥ ज्ञानाय हृदया
य नमः ॥ सहस्रमूर्धा विश्वात्मा ॥ ऐश्वर्या
य शिरसे स्वाहा ॥ सहस्रार्चिःसप्तजिह्वः ॥ शा
न्तये शिखायै वषट् ॥ त्रिसामा सामगः सा

म ॥ बलाय कवचायहुम्॥ रथाङ्गपाणिरस्त्रो
भ्यः ॥ तेजसे नेत्राभ्यां वौपट् ॥ शार्ङ्गध
न्वागदाधरः ॥ वीर्याय अस्त्रायफट् ॥ ऋतुः
सुदर्शनः कालः भूर्भुवःस्वरोम् दिग्बंधः इति
हृदयादिन्यासः ॥

॥ अथ ध्यानम् ॥

ॐ क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते
मौक्तिकानां मालाक्लृप्तासनस्थः स्फटिकमणि

निभैर्मौक्तिकैर्मण्डितांगः ॥ शुभ्रै रभ्रैरदभ्रैरुपरि
विरचितैर्मुक्तपीयूषवर्षैरानन्दी नः पुनीयाद
रिनलिनगदाशङ्खपाणिर्मुकुंदः ॥ १ ॥ अथवा
भूःपादौ यस्य नाभिर्वियदसुरनिलश्चंद्रसूर्यौ
च नेत्रे कर्णावाशाःशिरो द्यौर्मुखमपि दहनो
यस्य वास्तेयमब्धिः॥ अन्तः स्थं यस्य विश्वं
सुरनरखगगो भोगिगंधर्वदैत्यैश्चित्रं रंरम्यते
तंत्रिभुवनवपुषं विष्णुमीशं नमामि ॥२॥ अथ

वा ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ॥ ल
क्ष्मीकांतं कमलनयनं योगिभिर्ध्यानगम्यं वंदे
विष्णुं भवभयहरं सर्व लोकैकनाथम् ॥३॥ अथ
वा ॥ मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं
कौस्तुभोद्भासितांगम् ॥ पुण्योपेतं पुण्डरीका
यताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥४॥ अ
थवा ॥ सशङ्खचक्रं सकिरीटकुण्डलं सपीतव

स्त्रं सरसीरुहेक्षणम् ॥ स हारवक्षःस्थलकौ
स्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम्
॥५॥ ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभव
त्प्रभुः ॥ भूतकृद्भूतभृद्भावो भूतात्मा भूतभा
वनः ॥ १ ॥ पूतात्मा परमात्मा च मुक्तानां
परमा गतिः ॥ अव्ययः पुरुषः साक्षी क्षेत्रज्ञो
ऽक्षर एव च ॥२॥ योगो योगविदां नेताप्र
धानपुरुषेश्वरः ॥ नारसिंहवपुः श्रीमान् के

वि० शवः पुरुषोत्तमः ॥३॥ सर्वः शर्वः शिवः स्थ
णुर्भूतादिर्निधिरव्ययः ॥ संभवो भावनो भ
६ प्रभवः प्रभुरीश्वरः ॥४॥ स्वयंभूः शंभुरादि
पुष्कराक्षो महास्वनः ॥अनादिनिधनो ध
विधाता धातुरुत्तमः ॥५॥ अप्रमेयो हृ
शः पद्मनाभोऽमरप्रभुः ॥ विश्वकर्मा म
ष्ठास्थविष्ठः स्थविरो ध्रुवः ॥६॥ अग्राह्य
लोहिताक्षः प्रतर्दनः ॥

ो महाबलः ॥ १८ ॥ महाबुद्धिर्महावीर्यो म
शक्तिर्महाद्युतिः ॥ अनिर्देश्यवपुः श्रीमान
मेयात्मा महाद्रिधृक् ॥ १९ ॥ महेष्वासो म
हीभर्ता श्रीनिवासः सताङ्गतिः ॥ अनिरुद्धः
सुरानन्दो गोविन्दो गोविदांपतिः ॥ २० ॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ॥ हि
रण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥२१
मृत्युः सर्वदृक् सिंहः सन्धातासंधिमा

प्रसन्नात्माविश्वधृग्विश्वभुग्विभुः ॥ सत्कार्त्ता
सत्कृतिः साधुर्ज्जन्हुर्नारायणो नरः ॥२६॥ अ
संख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाध
नः ॥ २७ ॥ वृषाही वृषभो विष्णुर्वृषपर्वा वृ
षोदरः॥ वर्द्धनो वर्द्धमानश्च विविक्तः श्रुति
सागरः ॥२८॥ सुभुजो दुर्धरो वाग्मी महेन्द्रो
वसुदो वसुः ॥ नैकरूपो बृहद्रूपः शिपिविष्टः

हस्तजिदनन्तजित् ॥ ३३ ॥ इष्टो विशि
ष्टः शिखंडी नहुषो वृषः ॥ क्रोधहा
क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ३४॥ अच्यु
तः प्रथितः प्राणः प्राणदो वासवानुजः॥ अपां
निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥ स्कं
दः स्कंदधरो धुर्यो वरदो वायुवाहनः ॥ वा
सुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥ ३६ ॥ अ
शोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ॥

श्रीगर्भः परमेश्वरः ॥ करणं कारणं कर्ता वि
कर्ता गहनो गुहः ॥ ४१ ॥ व्यवसायो व्यव
स्थानः संस्थानः स्थानदो ध्रुवः ॥ परर्द्धिः
परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२ ॥
रामो विरामो विरजो मार्गो नेयो नयोऽन
यः ॥ वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदु
त्तमः ॥ ४३ ॥ वैकुंठः पुरुषः प्राणः प्राणदः
प्रणवः पृथः ॥ हिरण्यगर्भः शत्रुघ्नो व्यासो

वायुरधोक्षजः ॥ ४४ ॥ ऋतुः सुदर्शनः कालः
परमेष्ठी परिग्रहः ॥ उग्रः संवत्सरो दक्षो
विश्रामो विश्वदक्षिणः ॥ ४५ ॥ विस्तारः
स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ॥
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः
॥ ४६ ॥ अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपोम
हामखः ॥ नक्षत्रनेमिर्नक्षत्री क्षमः क्षामःस

तागमः ॥ अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो ध
नञ्जयः ॥ ७० ॥ ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्र
ह्मविवर्धनः ॥ ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो
ब्राह्मणप्रियः ॥ ७१ ॥ महाक्रमो महाकर्मा म
हातेजा महोरगः ॥ महाक्रतुर्महायज्वा महा
यज्ञो महाहविः ॥७२॥ स्तव्यः स्तवप्रियः स्तो
त्रं स्तुतिः स्तोतारणप्रियः ॥ पूर्णः पूरयिता
पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥ मनोजव

० को नैकः सवः कः किं यत्तत्पदमनुत्तमम् ॥
६ लोकबंधुर्लोकनाथो माधवो भक्तवत्सलः॥७८॥
सुवर्णवर्णो हेमांगोवरांगश्चंदनांगदी ॥ वीर
हा विषमः शून्योघृताशीरचलश्चलः ॥७९॥
अमानी मानदो मान्यो लोकस्वामी त्रिलोक
धृक् ॥ सुमेधा मेधजो धन्यः सत्यमेधा धरा
धरः ॥ ८० ॥ तेजोवृषो द्युतिधरः सर्वशस्त्र
भृतांवरः ॥ प्रग्रहो निग्रहो व्यग्रो नैकशृंगो

सर्ववागीश्वरेश्वरः ॥ महाह्रदो महा
ो महाभूतो महानिधिः ॥ ८६ कुमुदः कु
ः कुन्दः पर्जन्यः पावनोनिलः ॥ अमृतांशो
वपुः सर्वज्ञःसर्वतोमुखः॥ ८७॥ सुलभः सु
ः सिद्धः शत्रुजिच्छत्रुतापनः ॥ न्यग्रोधो
ारोश्वत्थश्चाणूरांध्रनिषूदनः ॥ ८८॥ सह १७
र्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ॥ अ

सत्यः सत्यधर्मपरायणः॥ अभिप्रायः प्रियार्हो
ऽर्हः प्रियकृत्प्रीतिवर्द्धनः ॥ ९३॥ विहायसगति
र्ज्योतिः सुरुचिर्हुतभुग्विभुः ॥ रविर्विरोचनः
सूर्यः सविता रविलोचनः ॥ ९४॥ अनन्तोहु
तभुग् भोक्ता सुखदोनैकजोऽग्रजः ॥ अनिर्वि
सः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥
सनत्सनातनतमः कपिलः कपिरव्ययः ॥ स्व
स्तिदः स्वस्तिकृत्स्वस्तिस्वस्तिभुक्स्वस्तिदक्षि

शो व्यादिशोदिशः ॥ १०० ॥ अनादिर्भूर्भुवो
लक्ष्मीः सुवीरोरुचिराङ्गदः ॥ जननोजनजन्मा
दिर्भीमो भीमपराक्रमः ॥ १०१ ॥ आधारनिल
यो धाता पुष्पहासः प्रजागरः ॥ ऊर्ध्वगः स
त्पथथाचारः प्राणदः प्रणवः पणः ॥२॥ प्रमाणं
प्राणनिलयः प्राणभृत्प्राणजीवनः ॥ तत्त्वं तत्त्व
विदेकात्मा जन्ममृत्युजरातिगः ॥ ३ ॥ भूर्भुवः
स्वस्तरुस्तारः सविता प्रपितामहः ॥ यज्ञो

० तंनीयस्य केशवस्य महात्मनः ॥ नाम्नां स
१० हस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ ८ ॥ य
इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥
नाशुभं प्राप्नुयात् किंचित् सोऽमुत्रेह च मा
नवः ॥ ९ ॥ वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो
विजयीभवेत् ॥ वैश्यो धनसमृद्धः स्याच्छूद्रःसु
खमवाप्नुयात् ॥ ११० ॥ धर्मार्थी प्राप्नुयाद्ध
र्ममर्थार्थी चार्थमाप्नुयात् ॥ कामानवाप्नुया

त्कामी प्रजार्थी प्राप्नुयात्प्रजाः ॥ ११ ॥ भक्ति
मान्यः सदोत्थाय शुचिस्तद्गतमानसः ॥ सहस्रं
वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत्॥१२॥ यशः
प्राप्नोतिविपुलं ज्ञातिप्राधान्यमेव च॥ अचलां
श्रियमाप्नोतिश्रेयःप्राप्नोत्यनुत्तमम्॥१३॥नभयं
क्वचिदाप्नोति वीर्यं तेजश्च विन्दति॥ भवत्य
रोगो द्युतिमान्बलरूपगुणान्वितः ॥१४॥ रो
गार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥

भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः
॥ १५ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्त
मम् ॥ स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वि
तः ॥ १६ ॥ वासुदेवाश्रयोमर्त्यो वासुवपराय
णः ॥ सर्वपापविशुद्धात्मा याति ब्रह्म सनात
नम् ॥ १७ ॥ न वासुदेवभक्तानामशुभं विद्यते
क्वचित् ॥ जन्ममृत्युजराव्याधिभयं नैवोपजा
यते ॥ १८ ॥ इमं स्तवमधीयानः श्रद्धाभक्ति

न्वितः ॥ युज्येतात्मा सुखक्षान्तिश्रीधृति
तिकीर्तिभिः ॥ १९ ॥ न क्रोधो न च मात्सर्यं
ोनाशुभामतिः ॥ भवन्ति कृतपुण्यानां
ानां पुरुषोत्तमे ॥ २० ॥ द्यौः सचन्द्रार्कन
ाः खं दिशो भूर्महोदधिः ॥ वासुदेवस्य
ण विधृतानि महात्मनः ॥ २१ ॥ ससुरा
सुरगन्धर्वं सयक्षोरगराक्षसम् ॥ जगद्वशे वर्त
तेदं कृष्णस्य सचराचरम् ॥ २२ ॥ इन्द्रियाणि

मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ॥ वासुदे
वात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥२३॥ स
र्वाऽऽगमानामाचारः प्रथमं परिकल्पते ॥ आ
चारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ २४॥
ऋषयः पितरो देवा महाभतानि धातवः ॥
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥२५॥
योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिक
र्म च ॥ वेदाः शास्त्राणि विज्ञानमेतत्सर्वं ज

नार्दनात् ॥ २६ ॥ एको विष्णुर्महद्भूतं पृथ
ग्भूतान्यनेकशः ॥ त्रींल्लोकान् व्याप्य भूता
त्मा भुङ्क्ते विश्वभुगव्ययः ॥ २७ ॥ इमं स्तवं भ
गवतो विष्णोर्व्यासेन कीर्तितम् ॥ पठेद्य इच्छे
त्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २८ ॥ विश्वे
श्वरमजं देवं जगतःप्रभवाप्ययम् ॥ भजन्ति ये
पुष्कराक्षं न तेयान्ति पराभवम् ॥ २९ ॥ अर्जुन
उवाच ॥ पद्मपत्रविशालाक्ष पद्मनाभ सुरो

त्तम ॥ भक्तानामनुरक्तनां त्राता भव जनार्दन
॥१३०॥ श्रीभगवानुवाच ॥ यो मां नामसहस्रेण
स्तोतुमिच्छति पाण्डव ॥ सोहमेकेन श्लोके
न स्तुत एव न संशयः ॥ ३१ ॥ नमोस्त्वनन्ता
य सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ॥
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुग
धारिणे नमः ॥ ३२ ॥ नमः कमलनाभाय नम
स्ते जलशायिने ॥ नमस्ते केशवानन्त वासु

द्गोविन्दरहितागमम् ॥ ३७ ॥ सर्ववेदेषु यत्पु
ण्यं सर्वतीर्थेषु यत्फलम् ॥ तत् फलं सम
वाप्नोति स्तुत्वा देवं जनार्दनं ॥ ३८ ॥ यो नरः
पठते नित्यं त्रिकालं केशवालये ॥ द्विकाल
मेककालं वा क्रूरं सर्वं व्यपोहति ॥ ३९ ॥ दह्यन्ते
रिपवस्तस्य सौम्याः सर्वे सदा ग्रहाः ॥ निली
यन्ते च पापानि स्तवेह्यस्मिन्प्रकीर्तिते ॥ ४० ॥
येन ध्यातः श्रुतोयेन येनायं पठितस्तवः ॥ द

कृपाणोर्वचो यथा ॥ वृह्महत्यादिकं पापं सर्वं सद्यो विनश्यति ॥ ४५ ॥ इति श्रीमन्महाभारते शतसहस्रसंहितायां वैयासिक्यामानुशासनिके पर्वणि दानधर्मे भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं सम्पूर्णम् ॥

श्रीगणेशाय नमः ॥ अथ भीष्मस्तवराजप्रार
म्भः ॥ जनमेजय उवाच ॥ शरतल्पे शयानस्तु
भारतानां पितामहः ॥ कथमुत्सृष्टवान् देहं
कं च योगमधारयत् ॥ १॥ वैशंपायन उवाच ॥
शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः॥
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः॥२॥
निवृत्तमात्रे त्वयने उत्तरे वै दिवाकरे ॥ समा
१९ वेशयदात्मानमात्मन्येव समाहितः ॥ ३ ॥ शु

क्लपक्षस्य चाष्टम्यां माघमासस्य पार्थिव ॥
प्राजापत्ये च नक्षत्रे मध्यं प्राप्ते दिवाकरे ॥४॥
विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चित
तः ॥ शुशुभे परयालक्ष्म्या वृतो ब्राह्मणसत्त
मैः ॥५॥ व्यासेन वेदविदुषा नारदेन सुरर्षि
णा ॥ देवरातेन वात्स्येन तथा तेन सुमन्तु
ना ॥६॥ तथा जैमिनिना चैव पैलेन च म
हात्मना ॥ शाण्डिल्यदेवलाभ्यां च मैत्रेयेण

च धीमता ॥ ७ ॥ असितेन वसिष्ठेन कौशि
केन महात्मना ॥ हारीतरोमशाभ्यां च तथा
त्रेयेण धीमता ॥ ८ ॥ बृहस्पतिश्च शुक्रश्च
च्यवनश्च महामुनिः ॥ सनत्कुमारः कपिलो
वाल्मीकिस्तुंबुरुःकुरुः॥९॥मौद्गल्यो भार्गवो रा
मस्तृणबिन्दुर्महामुनिः ॥ पिप्पलादश्च वा
युश्च संवर्त्तः पुलहः कचः ॥१०॥ कश्यपश्च
पुलस्त्यश्च क्रतुर्दक्षः पराशरः ॥ मरीचिरं

गिराः कण्वो गौतमो गालवो मुनिः ॥११॥
२ धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णोऽनु
भौतिकः॥ उलूकः परमो विप्रो मार्कण्डेयो म
हामुनिः॥१२॥ भास्करः पूरणः कृष्णः सूतः प
रमधार्मिकः ॥ शौव्येन याज्ञवल्क्येन शंखेन
लिखितेन च ॥ १३ ॥ एतैश्चान्यैर्मुनिगणैर्म
हाभागैर्महात्मभिः ॥ श्रद्धादमपरस्कारैर्वृत
श्चन्द्र इव ग्रहैः॥१४॥ भीष्मस्तु पुरुषव्याघ्र

कर्मणा मनसा गिरा ॥ शरतल्पगतः कृष्णं
प्रदध्यौ प्राञ्जलिः शुचिः ॥ १५ ॥ स्वरेणहृष्ट
पुष्टेन तुष्टाव मधुसूदनम् ॥ योगेश्वरं पद्मना
भं विष्णुं जिष्णुं जगत्प्रभुम् ॥ १६ ॥ कृताञ्जलिः
शुचिर्भूत्वा वाग्विदां प्रवरः प्रभुः ॥ भीष्मः
परमधर्मात्मा वासुदेवमथास्तुवत् ॥ १७ ॥ भी
ष्म उवाच ॥ आरिराधयिषुः कृष्णं वाचं जि
गदिषाम्यहम् ॥ तयाव्याससमासिन्या प्रीय

